# मेधा

१९६३-१९६४ तथा १९६४-१९६५

शासकीय दू. श्री वै. संस्कृत महाविद्यालय, रायपुर, मध्यप्रदेश
द्वारा प्रकाशित

# मेधा

शासकीय दू. श्री वै. संस्कृत महाविद्यालय, रायपुर

की

## शोध-पत्रिका

जुलाई १९६३-अप्रैल १९६४

ग्रंथसंख्या-३ एवं ४ तथा भाग-१ तथा २

जुलाई १९६४-अप्रैल १९६५

संपादक - डॉ. श्रीनाथ हसूरकर

शासकीय दू. श्री वै. संस्कृत महाविद्यालय, रायपुर, मध्यप्रदेश

द्वारा प्रकाशित

# मेधा

शासकीय दू. श्री वै. संस्कृतमहाविद्यालय, रायपुर,

की

शोध-पत्रिका

ग्रंथसंख्या-३ एवं ४ ] १९६३-१९६४ तथा १९६४-१९६५ [ भाग-१ तथा २

## विषयानुक्रमणिका



---

मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परि ।
मेधां सूर्यस्य रश्मिभिर्वचसा वेशयामहे ॥
( मेधा–सूक्त, ६ काण्ड, अथर्ववेद )

# अग्निचयन-याग-विमर्शः

डॉ. विनायक त्रिपाठी

इष्ट-प्राप्त्यनिष्ट-परिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति।

अस्माकं पूर्वजा ऋषयो वेदतत्त्ववेत्तार आसन्। तैः वेदस्वाध्याये संरक्षणे च स्वकीयं जीवनं दत्तम्। तस्यैव फलमिदं यद्यापि अस्माकं भारतस्यामूल्यनिधेर्वेदस्य दर्शनं येन केन प्रकारेण भवति।

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥**

इति वेदस्य महत्त्वं प्रदर्शयति।

तथा च—

**चातुर्वर्ण्यं त्रयोलोकाश्चत्वारश्चाश्रमाः पृथक्।**
**भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिद्धचति॥**

इत्यादिप्रमाणैः वेदस्य महत्त्वं सर्वे जानन्ति।

कर्मविधानविधाता धर्माधर्मनिर्णेता च सकलविद्यावदातो वेद एव। अतः श्रेयः-प्राप्त्यमिलाषिणे मनुष्याय वेदानुकूलानुष्ठानमेवेह परममुन्नतिसाधनम्।

वेदविहित-यज्ञेनैव मानवाः सर्वविधसुखप्राप्त्यर्थं समर्थाः भवितुं शक्नुवन्ति।

स्वर्गकामो यजेत, अग्निहोत्रञ्जुहुयात् स्वर्गकामः, स्वाराज्यकामो राजसूयेन यजेत, वाजपेयेनेष्ट्वा सम्राड् भवति, उद्भिदा यजेत पशुकामः, श्येनेनाभिचरन् यजेत, सावित्रँ स्वर्गकामश्चिन्वीत, पशुकामश्चिन्वीत, वृष्टिकामश्चिन्वीतेत्यादि विविधवाक्यसमूहैरैहिकामुष्मिकसकलकल्याणलाभाय यज्ञ प्राप्यन्ते—

**यज्ञेनैव जगत उत्पत्तिर्जायते, इति निश्चितमस्ति।**

अथर्ववेदे—"**अयं यज्ञो भुवनस्य नाभिः ।**"

ऋग्वेदस्य पुरुषसूक्तेऽपि—

"**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**"

तथा च—

"**तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । तस्मादश्वादजायन्त**" इत्यादिभिः सर्वेषां जीवानामुत्पत्तिर्यज्ञेनैव जाता । अतो मनुष्याणां श्रेष्ठतमं कर्म यज्ञ एवास्ति । "यज्ञो वै श्रेष्ठतमं कर्म" (श० प० १।७।४।५) शतपथब्राह्मणे तु ईश्वररूपेणैव यज्ञस्य वर्णनं कृतमस्ति ।

"प्रजापतिर्यज्ञः" (श० प० ब्रा० १।१।१।१३) "यज्ञो वै विष्णुः" (श० प० ब्रा० १।१।२।१३) इत्यादयो बहुत्राम्नाताः सन्ति ।

भगवता श्रीकृष्णेनापि गीतायामभिहितं यत् यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । (गीता ३।९) परन्तु दुर्भाग्यवशात् तेषां यज्ञानां लोप एव दृश्यते । ते हि यज्ञाः द्विविधाः सन्ति । श्रौताः स्मार्ताश्च । तथा च—स एष यज्ञः पञ्चविधोऽग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः, (ऐ० ब्रा०)

स्मार्ते सप्त यज्ञा भवन्ति— औपासनहोमः, वैश्वदेवम्, पार्वणम्, अष्टका, मासिश्राद्धम्, श्रवणा, शूलगव इति सप्त पाकयज्ञसंस्थाः ।

इमे पाकयज्ञाः दारकाले दायाद्यकाले वा गृहीतेऽग्नौ क्रियते ।

**कर्मस्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ।**
**दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ।।**—(या० स्मृ० १।९७)

श्रौतयज्ञा अपि हविः सोमभेदेन द्विविधा भवन्ति । तत्र—अग्निहोत्रम्, दर्शपूर्णमासौ, आग्रयणम्, चातुर्मास्यानि, निरुढपशुबन्धः, सौत्रामणी, पिण्डपितृयज्ञः, इति सप्त हविर्यज्ञसंस्थाः ।

तथा च—

अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति सप्त सोमसंस्थाः ।

इति श्रौतानि स्मार्तानि च मिलित्वा एकविंशतिरुक्तानि । श्रौतयज्ञेषु गृहीतश्रौताग्नेः सपत्नीक यजमानस्यैवाधिकारो वर्तते । श्रौताग्निग्रहणं तु आधानेनैव भवति । आधानसमयस्तु—वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, वर्षासु वैश्यः, इति श्रुतिप्रमाणैः त्रैवर्णिकानामेवाधिकारो वर्तते ।

तत्रापि—"जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादि श्रुत्या पञ्चविंशतेरुपरि चत्वारिंशतो वर्षेभ्यः पूर्वं सपत्नीकेन पुरुषेण कर्त्तव्यम् ।

एवंविधः पुरुष एव सोमयागस्याधिकारी भवति। सोमयागे षोडश ऋत्विजो भवन्ति। सोमलतयैव अत्र यागः क्रियते। सोमयागस्यैवाङ्गयागोऽग्निचयनयागो वर्तते।

तत्र पूर्वमग्निचयनशब्दस्य निर्वचनं क्रियते।

## अग्निचयन-शब्दार्थः।

"अग्निचयनम्" इत्यस्मिन् समस्ते नामपदे अवान्तरं पदद्वयं वर्तते। एकम् "अग्नि" पदमपरं च "चयनम्" इति। तत्राग्नि पदम् अङ्गति इत्यग्निरिति विग्रहे "अगि गतौ" इति धातोः इदित्वात् "इदितो नुम् धातोः" इति नुमि कृते अङ्ग इत्यस्मात् "अङ्गेर्नलोपश्च" इत्युणादि सूत्रेण नि प्रत्यये नुमो नकारस्य लोपे च कृते सम्पद्यते।

चयनम् इति पदं च चीयते अस्मिन् चयनमिति विग्रहे "चिञ् चयने" इति स्वादि-परस्मैपदि धातोः "करणाधिकरणयोश्च" इति सूत्रेण अधिकरणे ल्युटि अथवा चीयते इति चयनम् इति विग्रहे "ल्युट् च" इत्यनेन भावे ल्युटि तस्य च "युवोरनाकौ" इति अनादेशे गुणे अयादेशे च कृते व्युत्पद्यते।

ततः अग्नेश्चयनम् अग्निचयनम् अथवा अग्नेश्चयनम् यस्मिन् तत् अग्निचयनं नाम।

अग्निशब्दस्य बहवोऽर्थाः बहूनि निर्वचनानि पर्यायशब्दाश्च समुपलभ्यन्ते। तत्र वैश्वानरः, वह्निः, वीतिहोत्रः, धनञ्जयः, कृपीटयोनिः, ज्वलनः, जातवेदाः, तनूनपात्, बर्हिः, शुष्मा, कृष्णवर्त्मा, शोचिष्केशः, उषर्बुधः, आश्रयाशः, बृहद्भानुः, कृशानुः, पावकः, अनलः, रोहिताश्वः, वायुसखः, शिखावान्, आशुशुक्षणिः, हिरण्यरेताः, हुतभुक्, दहनः, हव्यवाहनः, सप्तार्चिः, दमुनाः, शुक्रः, चित्रभानुः, विभावसुः, शुचिः, अप्पित्तम्, इत्येते शब्दाः अग्निशब्दस्य अनर्थान्तररूपेणैव यत्र तत्र प्रायः सर्वत्रैव प्रयुक्ताः (पठिताः) पर्यायशब्दा दृश्यन्ते।

यास्काचार्यनिरुक्ते सप्तमाध्यायेऽपि—अग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामः इत्युक्त्यनन्तरम् 'अग्निः कस्मात्?' इति प्रश्नमुत्थाप्य—अग्रणीर्भवति इति—सर्वेष्वर्थेष्वसौ आत्मानमग्रं नयति सर्वत्र तथोपकरोति यथा अग्रं संपद्यत इत्यर्थः। अत्र अग्रशब्दः प्रधानवाची स एव वा अग्रं नयति। सेनां वा अग्रे नयति इति अग्रणीः तथा च ब्राह्मणेऽपि—अग्निर्वै देवानां सेनानीः इति एतदेवाभिप्रेत्य ब्राह्मणे बह्वयः श्रुतयः सन्ति।

यथा—"अग्निर्मुखं प्रथमो देवानामिति।" (ऐ० ब्रा० १।४)

"अग्निर्वै देवानामवमः।" इति (ऐ० ब्रा० १।१)

"अग्निरग्रे प्रथमो देवतानाम्" इति (तै० ब्रा० १।४।३)

"अग्निरवमो देवतानाम्" इति (तै० सं० ५।६।१)

"स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निः" (श० प० ६-१-११) अथवा "अग्रं यज्ञेषु प्रणीयते"

न तावत् किञ्चिदप्यन्यत् क्रियते, यावदयं न प्रणीयते।

तदनन्तरमेव अन्यानि कर्माणि क्रियन्ते। अथवा "अङ्गं नयति सन्नममानः"

तृणे वा काष्ठे वा यत्र संनमति – आश्रयति तदात्मनोऽङ्गतां नयति आत्मसात्करोतीत्यर्थः।

"अक्नोपनो भवतीति स्थौलाष्ठीविः।"

स्थौलाष्ठीवतः पुत्र स्थौलाष्ठीविः आचार्य एवं मन्यते तत्र न क्नोपयत्यर्थात् न स्नेहयति किन्तु काष्ठादिकं विरूक्षीकरोति। अग्नेः स हि स्वभावः।

"त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः।"

शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते।

इतात् 'इणगतौ' इति धातोः ण्यन्ते आययतीति रूपम् भवति ततः अकारमादत्ते।

अक्तात् "अञ्जूव्यक्तिम्रक्षणकान्तिगतिषु" इति धातोः अथवा दग्धात् "दह भस्मीकरणे" इति धातोः जश्त्वादि कृते गकारमादत्ते।

"णीञ् प्रापणे" इति धातोः ह्रस्वे कृते "नि" आदत्ते ततो धातुत्रयं मिलित्वाऽग्निशब्दो भवति।

यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविः पाके च प्रेरयतीति समुदायार्थः। अथवा—

एति च दहति च नयति च हवींषि देवेभ्य इत्यस्मादग्निः। शतपथब्राह्मणेऽपि—

अथ यो गर्भोऽन्तरासीत्। सोऽग्निरसृज्यत। स यदस्य सर्वस्याग्रमसृज्यत तस्मादग्निः (श० प० ६।१।१।११)

ब्राह्मणग्रन्थेष्वग्निस्वरूपाणि कार्याणि च बहुत्र वर्णितानि सन्ति। यथा कौषीतकी ब्राह्मणे—

अग्निर्वा अन्नानां शमयिता (कौ० ब्रा० ६।१४), अग्निर्वै मृत्युः (कौ० ब्रा० १३।३) अग्निर्वै रक्षसामपहन्ता (कौ० ब्रा० ८।४) त्रिवृद्वा अग्निः। अङ्गारा अर्चिर्धूम इति। (कौ० ब्रा० २८।५) सर्वं वा इदमग्नेरन्नम्। (कौ० ब्रा० २।१)

अथ यैवास्य शिवा शग्म्या यज्ञियातनूरासीत्तयेह मनुष्येभ्योऽतपत्। एता वा अग्नेस्तन्वः। (कौ० ब्रा० १।१)

यत्किञ्चिद्दार्ष्टिविषयकम्, अग्निकर्मैवतत् (नि० अ० ७)

तथा च—

अथोपांशुरन्तर्याममभिभवत्यन्तर्याम उपांशु च। एतयोरन्यतरा देवौष्ण्यं प्रासुवत्। यदौष्ण्यं स पुरुषः। अथ यः पुरुषः सोऽग्निर्वैश्वानरः। (मै० उ० २।६)

शतपथेऽपि—अथ य एतस्मिन्मण्डले पुरुषः सोऽग्निः। (श० प० १०।५।२)

यथा सर्वेषां देवानां ध्यानं क्रियते तथैवाग्नेरपि ध्येयरूपमस्ति—

रुद्रतेजः समुद्भूतं द्विमूर्धानं द्विनासिकम् ।
षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥
यामग्रभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् ।
स्रुवं स्रुचश्च शक्ति च अक्षमालां च दक्षिणे ॥
तोमरं व्यजनञ्चैव घृतपात्रं तु वामके ।
बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥
दक्षिणञ्च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखम् ।
द्वादशकोटि मूर्त्याख्यं द्विपञ्चाशत् कलायुतम् ॥
स्वाहा स्वधा वषट्कारैरङ्कितं मेषवाहनम् ।
रक्तमाल्याम्बरधरं रक्तं पद्मासनस्थितम् ॥
रौद्रं तु वह्निनामानं वह्निमावाहयाम्यहम् ॥ (इति रुद्रकल्पद्रुमे)

शुक्ल यजुर्वेदेऽपि अग्नेः सप्तजिह्वेति निश्चयार्थं मन्त्रोऽयमाम्नायते—

सप्त ते अग्ने समिधः सप्तजिह्वाः सप्त ऋषयः सप्तधाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्त्वा घृतेन स्वाहा । (शु० य० सं० १७।७९)

तथा मुण्डकोपनिषद्यपि—

काली कराली च मनोजवा च विलोहिता चापि सधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लोलायमाना इति सप्तजिह्वाः ॥ (मुण्ड० १।२)

एकोऽपि सन्नयं देवताविशेषोऽग्निः 'महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' इति नैरुक्तानां सिद्धान्तमनुसृत्य कर्मविशेषेण विभिन्नानि नामानि भजते । यथा हि—

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः ॥
पुंसवे चमसो नाम शोभनः शुभकर्मसु ।
सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्मणि ॥
पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः ।
सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः ॥
गोदाने सूर्यनामा स्यात् केशान्ते याजकः स्मृतः ।
चतुर्थी कर्मणि शिखी धृतिरग्निस्तथापरे ॥
आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः ।
ब्रह्माग्निर्गार्हपत्ये स्याद्दक्षिणाग्नि रथेश्वरः ॥
विष्णुराहवनीये स्यादग्निहोत्रे त्रयो मताः ।
लक्षहोमेऽभीष्टदः स्यात् कोटिहोमे महाशनः ॥

एके घृतार्चिषां प्राहुरग्निध्यान परायणाः ।
रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा ।।
पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे वशकृत् प्रोक्तो वनदाहे तु पोषकः ।।
उदरे जठरो नाम क्रव्यादः शवभक्षणे ।
समुद्रे वाडवो ह्यग्निर्निलये संवर्त्तकस्तथा ।।
सप्तविंशति व्याख्याता अग्नयः कर्मसु स्मृताः ।
तं तमाहूय होतव्यं यो यत्र विहितोऽनलः ।।
अन्यथा विफलं कर्म सर्वं तद्राक्षसं भवेत् ।।

ज्यौतिषशास्त्रे हि खगोलवर्तिनां ग्रहाणां प्रकृतौ कश्चन विशिष्टः प्रभावः स्थितिश्च वर्ण्यते । तत्र प्रसिद्धेषु नवसु ज्योतिःस्वरूपेषु ग्रहेष्वपि अग्निरेवायं स्वं महिमानं ख्यापयतीति प्रतिग्रहं वर्तमानानामग्नीनां नामभिः स्पष्टं भवति । तानि च ग्रहागतानामग्नीनां नामान्येवं स्मर्यन्ते ।

आदित्यादि ग्रहाणां साम्प्रतं ह्यग्निरुच्यते ।
आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते ।।
धूमकेतुस्तथा भौमे जठरोऽग्निर्बुधे स्मृतः ।
बृहस्पतौ शिखीनाम शुक्रे भवति हाटकः ।।
शनैश्चरे महातेजा राहौ केतौ हुताशनः ।।

श्रौतानां यज्ञानां साधनत्वेन विहितस्याग्नेरपि याज्ञिकैः वितानं सम्पाद्यते । तच्चेदमग्नीनां वितानं (विस्तारः) ब्राह्मणग्रन्थेषु स्पष्टमुपदिष्टं कल्पग्रन्थेषु सुबोधतामापदितं पञ्चसु आयतनेषु सम्पाद्यत इति । पञ्चाप्यमी अग्नयो 'वैतानाः' इति शास्त्रकृद्भिर्व्यवह्रियन्ते । त इमे वैतानाः पञ्चाग्नयो नाम्ना एवं संगृह्यन्ते ।

आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च ।
अन्वाहार्यो गार्हपत्य इत्येते पञ्चवह्नयः ।।

"पञ्चाग्नयो ये च त्रिणाचिकेता" इति श्रुतिरप्येतेषां पञ्चानामग्नीनां माहात्म्यं ज्ञापयति ।

एवं बहुविधा अर्थाः अग्निशब्दस्य कृता दृश्यन्ते याज्ञिकैस्तु अविवक्षितस्थानः निर्ज्ञातैस्तद-भिधानः कर्माङ्गभूतो देवताविशेषः अग्निशब्देन गृह्यते ।

प्रकृते तु अग्निशब्देनेष्टकाभिः सम्पादितमग्न्याधारभूतं स्थण्डिलमुच्यते ।

अग्नि शब्देन इष्टकाभिः सम्पादितमग्न्याधारभूतं स्थण्डिलमुच्यते । "अथाग्निमारोहन्ति" (श० प्र० बा० ९।२।३।२४) चित्याग्नि समीप गमनानन्तरं "क्रमध्वम्" (शु० प० १७।६५)

इत्यादिभिः पञ्चभिर्मन्त्रैस्तस्यारोहणं विधत्ते । इति ज्ञायते यदग्निशब्देन स्थण्डिलमेवोच्यते, यतः अग्नेरुपरि न हि कश्चिदप्यारोहणं कर्त्तुं शक्नोति ।

तच्च सौमिकमहावेद्यान्तर्गतोत्तरवेद्यामेव निष्पाद्यते ।

" उत्तरवेद्यां ह्यग्निश्चीयते "

" उत्तरवेद्यां चिन्वते " ( तै० ब्रा० ३।११।९ ) तथा " उत्तरवेद्यामेव सत्रियमचिन्वत " ( तै० ब्रा० ३।११।९ ) इत्यादिभिः श्रुतिभिरुत्तरवेदेरुपर्येव स्थण्डिलनिर्माणस्यविहितत्वात् । एवं च दशपद्यायां सौमिक्यामुत्तरवेद्यां ततोऽप्यधिक परिमाणस्य स्थण्डिलस्य कर्तुमशक्यत्वेन पदवृद्ध्यादिना स्थण्डिलपरिमितामुत्तरवेदिं वर्धयित्वा तत्र स्थण्डिलं निष्पादनीयम् । इदमेव स्थण्डिलमग्न्याधारत्वादग्निरिति व्यवह्रियते ।

चितिः, चयनम्, अग्निचयनम्, इत्यपि तस्यैव पर्यायः । इदं च स्थण्डिलं सोमयागस्याङ्गम् । कुतः ? " अग्निः सोमाङ्गं तद्गुणव्यतिषङ्गात् " (का० श्रौ० सू० १६।१।१) इत्युक्तेः सोमगुणैर्व्यतिषज्य अस्य पाठो वर्तते । तथा च " अन्तरोपसदौ चिनोति " (श० प० १०।२।५।१) इति श्रुत्या ज्ञायते यत् पौर्वाह्णिक्यापराह्णिक्योरुपसदोर्मध्येचिनुयात् । तत्र साग्निकप्रकृतावग्निष्टोमे तिस्र उपसदः साग्निके ऐकाहिके क्रतौ तिस्र उपसदः । द्वादशाह–गवामयन–तापश्चितादिषु अहीनसत्रसांवत्सरेषु द्वादश–चतुर्विंशति–षष्ठ्युत्तरत्रिशतसंख्या उपसद इति वक्ष्यते । तास्च त्रित्वादि पक्षेष्वपि एकैकस्मिन् दिने पूर्वाह्णापराह्णयोः उपसदः कार्याः । तथा ऐतरेय ब्राह्मणेऽपि—

" त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैकामुपायंस्ता द्वादश समपद्यन्त " (ऐ० ब्रा० ४।६।२३) तथा " तस्मात्सु पूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णेऽपरया " (ऐ० ब्रा० ४।६।२३) तथा " त इमाः षट् सतीरुपसदो द्विर्द्विरेकैकामुपायन् " (ऐ० ब्रा० ४।६।२३) इत्यादि प्रमाणैर्ज्ञायते यत् चयनं सोमाङ्गम् ।

तथा च सोमक्रयण प्रकरणे—

" चितो गार्हपत्यो भवति–अचित आहवनीयः अथ राजानं क्रीणाति । अयं वै लोको गार्हपत्यो द्यौराहवनीयः । अथ योऽयं वायुः पवते–एष सोमः । एतं तदिमौ लोकावन्तरेण दधाति । तस्मादेष इमौ लोकावन्तरेण पवते । " (श० प० ७।३।१।१) इति श्रुत्याज्ञायते यत्—

गार्हपत्याहवनीययोर्मध्ये चोदकप्राप्तः सोमक्रयः कर्तव्य इत्यर्थः, सोमस्य गार्हपत्याहवनीययोर्मध्येऽवस्थानं लोकत्रयरूपेणोपपादयति । भूर्लोकंस्वर्लोकात्मकौ गार्हपत्याहवनीयौ । योऽयं वायुः पवते एष एव क्रीयमाणः सोमः तत्क्रयस्य गार्हपत्यचयनादूर्ध्वमाहवनीय चयनात् पूर्वमेतस्मिन् समयेऽनुष्ठानादेतं सोमात्मकं वायुमिमौ लोकावन्तरेणानयोर्लोकयोर्मध्ये स्थापयति । यस्मादेव वायुसंस्तुतः सोमो मध्ये क्रीयते तस्मादेव दृश्यमानो " वायुः " इमौ लोकौ भूर्लोकस्वर्लोकावन्तरेण पवते ।

अन्तरेणोपसदौ चिनोतीत्यादि सोमगुणमिश्रत्वाच्चयनं सोमाङ्गम्। तच्च प्रथमप्रयुक्ताग्निष्टोम संस्थ ज्योतिष्टोमव्यतिरिक्तसोमेष्विच्छया स्यात्। वाजपेये न चयनम्।

उत्तरवेदिमपरेणौदुम्बरीमासन्दीमित्यभिषेके उत्तरवेदिसूचनात्। समहाव्रते क्रतौ तु नियमः। तत्र चयनं कर्तुमिच्छन् फाल्गुन्यनन्तरं प्रतिपदि पौर्णमासेनेष्ट्वा फाल्गुन्याः पूर्वस्यां माघसमाप्त्यमावास्यायां वा प्रथमप्रयोगे इष्टकापशु यागोऽग्नीषोमीयवत् कार्यः।

**सोमयागे चतुर्थेऽह्नि प्रातरौपवसथ्येऽहनि उपसदौ समस्य**
**पौर्वाह्णिकीमपराह्णिकीं चोपसदं प्रातरेव तन्त्रेण कुर्यात्।**

तत्र पौर्वाह्णिक्या उपसदोऽनुष्ठाने कृते सत्येव पत्नीयजमानाभ्यां स्वे स्वे व्रतेऽर्द्धं प्रयच्छेत्। परन्तु चयने पौर्वाह्णिक्योपसदा प्रचर्य सर्वं वा व्रतं प्रयच्छेदर्द्धं वा प्रयच्छेत्। "सर्वं वाग्नौ" (का० श्रौ० सू० ८।३।१७)। एकेनैवाह्ना साध्याः सोमयागा एकाहशब्दवाच्याः। द्वादशाहस्तु द्वादशभिरहोभिः साध्यः। तेष्वेकाहेषु द्वादशाहे च अग्निष्टोम संस्थाकज्योतिष्टोमधर्माः प्रवर्तन्ते। "ज्योतिष्टोमधर्मा–एकाहद्वादशाहयोस्तद्गुणदर्शनात्" (का० श्रौ० सू० १२।१।१) तस्मिन् द्वादशाहेऽपि सचयन द्वादशाहो भवति।

"अग्निं चेष्यमाणाः समारोह्य गृहपतिर्मध्ये मन्थत्यर्द्धश इतरे दक्षिणोत्तराः।" (का० श्रौ० सू० १२।१।१५)

चयनं कर्त्तुकामाः स्वान् स्वानग्नीन् स्व स्वारण्योः समारोपयेयुः। ततः प्राजापत्येष्टकापशु यजनप्रदेशे समागत्य गृहपतिर्मध्ये मन्थेत्। तत्र सर्वसाधारणीकृते विहारे सचयने द्वादशाहे प्राजापत्य इष्टकापशुः कार्यः।

अत्र प्रथमं प्राजापत्य एवेष्टकापशुः न पञ्च पशवो नापि वायव्यो नाप्यालम्भपक्षः। "तत्र प्राजापत्याः पशुः" (का० श्रौ० सू० १२।१।१७) तथा तस्मिन्नेव दिने दीक्षा भवति "तदहर्दीक्षा" (का० श्रौ० सू० १२।१।१९) पशोः शिरः सुगुप्ते देशे निधाय यस्मिन्नहनि प्राजापत्यः पशुः कर्तव्यत्वेन विहितंस्तस्मिन्नेव दिने उखा सम्भरणान्तं कृत्वा दीक्षा कार्या। इत्यादि प्रमाणेन ज्ञायते यत् सोमाङ्गमेवाग्निचयनं भवति।

तथा आपस्तम्बेऽपि लिखितमस्ति यत् "साग्निचित्यो भवति" (आप० श्रौ० २१।१।२) द्वादशाहः साग्निचित्यो भवति।

तथा च शतपथ ब्राह्मण आयाति यत्—"प्रायणीयेन प्रचर्य सीरं युनक्ति" (श० ब्रा० ७।२।२।२)

"स्वर्गं वा एतेन लोकमुपप्रयन्ति यत्प्रायणीयस्तत्प्रायणीयस्य प्रायणीयत्वम्" (ऐ० ब्रा० २।१।१)। प्रायणीयाख्यो यः कर्मविशेषोऽस्त्यनेन कर्मणा यजमानाः स्वर्गलोकं सामीप्येन प्राप्नुवन्ति। तस्मात्प्रयन्त्यनेनेति व्युत्पत्या तत् प्रायणीयनाम संपन्नम्। "प्राणो वै प्रायणीय उदान उदयनीयः समानो होता भवति समानौ हि प्राणोदानौ प्राणानां क्लृप्त्यै प्राणानां प्रतिज्ञाप्त्यै" (ऐ० ब्रा० २।१।२)।

प्राणवायोः प्रायणीयकर्मणश्च प्रशब्दसाम्यादभेदः। उदानवायोरुदयनीय कर्मणश्चोच्छब्द साम्यादभेदः। किं च प्रायणीयोदयनीययोः कर्मणोर्याज्यानुवाक्यादि प्रयोगार्थमेक एव होता भवति। प्राणोदानवायू चैकदेहवर्तित्वादेकेन होत्राऽनुष्ठेयाभ्यां कर्मभ्यां समानावतो वायुविशेषयोस्चाभेदः। तच्च कर्मद्वयानुष्ठानं प्राणवायूनां क्लृप्त्यै स्व स्व व्यापारसामर्थ्याय भवति। तथा प्राणवायूनां प्रत्येकमयं प्राणोयमुदान इत्यादि विशेषस्य प्रज्ञानाय भवति। तस्मात् कर्मद्वयं प्रशस्तमित्यर्थः। "आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयो यज्ञस्य धृत्यै यज्ञस्य वर्त्सनद्धयै यज्ञस्याप्रस्रंसाय" (ऐ० ब्रा० २।५।११) इति सोमयागस्यादौ प्रायणीयेष्टिः। अन्ते चोदयनीयेष्टिः तयोरुभयोरयमदिति देवताकश्चरुः। सोऽयं तस्य यज्ञस्य धारणाय मण्याकारो ग्रन्थिविशेषः। तस्य बन्धनं तत्सिद्ध्यर्थमुभयत्रादित्यचरुकरणम्। बन्धनस्थानीयेन चरुणा यज्ञस्य धारणं सिध्यति। धारणे च सति यज्ञाङ्गं किञ्चिदपि स्रस्तं न भवति। ततो यज्ञस्याप्रस्रंसायोभयतश्चरुः। अतो ज्ञायते यच्चयनं सोमाङ्गम्। तथा च कात्यायनेऽपि—

"**दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति**" (का० श्रौ० सू० ७।५।१२) दीक्षणीयेष्ट्यनन्तरं दीक्षाभिव्यञ्जकदण्डादिधारणान्ते प्रायणीय संज्ञकामिष्टिं कुर्यात्। तत्रादित्यै चरुं निर्वपेत्।

अत्र सचयने सोमयागे कर्षणं क्रियते—

"प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम्" (का० श्रौ० सू० १७।२।७)

"मौञ्जं त्रिवृद्रज्जव्यम्" (का० श्रौ० सू० १७।२।८)

"षड् द्वादश चतुर्विंशति वा युनक्ति पूर्वेणोत्तरा॑ꣳसम्" (का० श्रौ० सू० १७।२।९)

तत्रौदुम्बरे सीरे अग्नेरुत्तरांसं पूर्वेण षड् द्वादश चतुर्विंशतिं वाऽनड्डुहो योजयेत् प्रतिप्रस्थाता।

शतपथ ब्राह्मणेऽपि—

प्रत्येत्य प्रायणीयेन प्रचरति। प्रायणीयेन प्रचर्य सीरं युनक्ति एतद्वाऽएनं देवाः संस्करिष्यन्तः परस्तादन्नेन समार्धयंस्तथैवैनमयमेतत्संस्करिष्यन्पुरस्तादन्नेन समर्धयति सीरं भवति सेर॑ꣳहैतद्यत्सीरभिरामेवास्मिन्नेतद्दधाति।

इत्यादिभिः प्रमाणैश्चयनं सोमाङ्गम्।

तत्र चयनं द्विविधम्—

अग्निचयनं सोममात्रे विकल्पेन भवति। परन्तु महाव्रत संज्ञकस्तोत्रविशिष्टे सोमयागे नित्यमेव भवति।

"इच्छतः समहाव्रते नियमः" (का० श्रौ० सू० १६।१।२)

अग्निचयनयाग इच्छतः विकल्पेन सोमयागे भवतीत्यर्थः। परन्तु शतपथे तु—

"अयं वाव लोकऽएषोऽग्निश्चितः। अन्तरिक्षं महाव्रतं द्यौर्महदुक्थं तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थम्। सह हीमे लोका असृज्यन्त। तद् यदग्निः प्रथमश्चीयते—अयं ह्येषा लोकानां प्रथमोऽसृज्यत।" (श० प० १०।१।२।२)

सोमयागेऽप्यग्निष्टोमस्य प्रथमप्रयोगे चयनयागस्य प्राप्तिर्न भवति। "न प्रथमाहारे" (का० श्रौ० सू० १६।१।३) अत्र प्रथमाहारस्यार्थ एवं क्रियते—प्रथममाह्रियते—क्रियते इति प्रथमाहारः, अर्थात् प्रथमप्रयोगः। अतोऽग्निष्टोमस्य प्रथमप्रयोगेऽग्निचयनं न कुर्यात्। परन्त्वत्र कर्काचार्यास्तु प्रथमाहार शब्देनाग्निष्टोम संस्थाको ज्योतिष्टोमः सर्वोऽप्यभिधीयते, न तस्य प्रथम प्रयोगमात्रम्। अतोऽग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य द्वितीयादि प्रयोगेष्वपि न चयनप्राप्तिः। किन्तूक्थ्यादि संस्थान्तरेष्विच्छया कर्तुं शक्यते।

इत्यादिप्रमाणैः निश्चितं यत् चयनयागोऽङ्गयागः। सोमयाग एवास्य प्रकृतिः।

अतः सोमयागस्यैवाङ्गयागोऽग्निचयनयागः।

---

# पाणिनीये कालवाचकशब्दाः

प्रा. श्रीकृष्णशास्त्री कानिटकरः

अस्ति भगवतः पाणिनेः अष्टके एका पञ्चसूत्री प्रथमाध्यायस्य प्रथमे पादे। तत्र प्रथमं सूत्रमस्ति "तदशिष्यं संज्ञा प्रमाणत्वात्" १।२।५३ इति। लुपि युक्तवद्व्यक्ति वचने १।२।५१ इति सूत्रेण प्रत्ययस्य लुपि प्रकृत्यर्थानुसारं लिङ्गवचनं विधीयेते। यथा अङ्गानां निवासो जनपदः अङ्गाः, वङ्गाः, कलिङ्गाः। अत्र जनपदे लुप् (४।२।८१) इति प्रत्ययस्य लुपि, प्रकृतिवत् लिङ्गवचने भवतः। तदशिष्यं संज्ञाप्रमाणत्वात् इति सूत्रेण तद् इति शब्देन युक्तवद्भावमुद्दिश्य कस्य शब्दस्य कोऽर्थः इत्यत्र तस्माच्छब्दाज्जायमानः बोध एव प्रमाणम् अतः लुपि युक्तवद् इति युक्तवद्भावसूत्रं नारम्भणीयमिति प्रतिपाद्यते। तस्येदं तात्पर्यम्—दाराः इति कथने दारशब्दस्यार्थः स्त्री, साचैका इति गम्यते। तथापि स दारशब्दः स्वार्थनिष्ठलिङ्गसंख्यापेक्षया पुंस्त्वबहुत्वयुक्तं स्त्रीरूपं स्वार्थं दर्शयति। यतोऽयमर्थः तादृशार्थबोधकं सूत्रं विनैव प्रमाणत्वेन स्वीक्रियते, अतः युक्तवद्भावसूत्रमपि नावश्यकम्, स्वभावत एव लिङ्गसंख्याद्यर्थस्य सिद्धत्वात्।

द्वितीये—लुब्योगाप्रख्यानात् (१।२।५४) तृतीये—योगप्रमाणे च तदभावे दर्शनं स्यात् (१।२।५५) चतुर्थे—प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् (१।२।५६) इति सूत्रे च स्वभावतः, रूढितो, लोकव्यवहारतो वा तत्तदर्थस्य सिद्धत्वात् एतानि सूत्राणि न कर्तव्यानीति प्रतिपादितम्।

यथा प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानम् इत्यर्थकं प्राचीनवैयाकरणैः कृतं सूत्रम् अनावश्यकमिति (१।२।५६) क्रमाङ्के पूर्वसूत्रे प्रतिपादितम्, तथैव कालोपसर्जने च तुल्यम् (१।२।५७) इति सूत्रे अद्यतनादिकालविषयकम्, अप्रधानमुपसर्जनमित्यादिकं च प्राचीनवैयाकरणैः कृतं वचनं न कर्तव्यम् इति निर्दिष्टम्, व्याकरणमजानानस्यापि जनस्य लोकव्यवहारेण तत्र सम्यक् परिचयात्।

यदा संस्कृत भाषा जनभाषा आसीत् तदालोकव्यवहारादेव अद्यतनादिकालविशेषवाचकनां परिचयोऽपि समभूत्। अद्यत्वे तु न तथा। अद्यत्वे वराकी संस्कृतभाषा लोकव्यवहारात्तु तिरस्कृता एव पण्डितसमाजादपि प्रतिक्षणं दूरे धावति, अतः पाणिनिनये दृष्टानां केषाञ्चन कालसामान्यवाचकानां कालविशेषवाचकानां च संक्षिप्तः परिचयः आवश्यकः।

प्रायेण मुहूर्तमारभ्य—अहन्, रात्रि, पूर्वाह्ण, अपराह्ण, प्राह्ण, तमिस्रा, निशा, अहोरात्रावयव, अहोरात्र, अनहोरात्र, षष्टिरात्र, अहर्दिव, नक्तन्दिव, रात्रिन्दिव, उषस्, व्युष्ट, प्रदोष, सायम्, सायंप्रातिक, सन्धिवेला, (सन्ध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पञ्चदशी,

पौर्णमासी, प्रतिपद्, संवत्सर ) पौर्णमासी, अमावास्या, अमावस्या, आग्रहायणी, मास, माधव-मधव्य, अर्द्धमास, पूर्णमास, षण्मास, पक्ष, वत्सर, संवत्सर, वर्ष, संवत्, हायनान्त, समा, अनु-संवत्सर, ऋतु, ऋतव्य, वसन्त, ग्रीष्म, निदाघ, वर्षा, प्रावृष्, शरद्, हेमन्त, शिशिर, अयन, वर्तमान, वर्तमानवद्, वर्तमानसामीप्य, भूत, भूतवद्, भविष्यद्, अनद्यतन, अनद्यतनवद् इत्यादयः शब्दाः कालविशेषवाचकाः पाणिनीये शास्त्रे दृश्यन्ते। अस्मिन् लेखे तेषु केचन शब्दाः व्याख्यायन्ते। तेषां सूत्रानुसारं सूची अत्रैव दीयते। पाणिनीये नये बहुत्र आगताः काल-सामान्यवाचिनस्तु अग्रिमे लेखे वर्णयिष्यन्ते। तेषां सूत्रानुसारं सूची अपि तदैव दास्यते।

मुहूर्तशब्दः—अणृगयनादिभ्यः ४।३।७३ इति सूत्रस्थे ऋगयनादिगणे पठितः। मुहूर्तशब्दः—द्वादशक्षणात्मककालवाचकः। तथा च अमरः—

**अष्टादश निमेषास्तु काष्ठा, त्रिंशत्तुताः कलाः।**
**तास्तुत्रिंशत्क्षणः, ते तु मुहूर्तो द्वादशास्त्रियाम्॥**

ते तु त्रिंशदहोरात्रः। ( कालवर्गः पंक्तयः—२३६–२३८ ) त्रिंशतो मुहूर्तानां दिनमेकं भवति। दिने च षष्टिः घटिकाः। अतः त्रिंशतामुहूर्तैः विभक्ताः षष्टिः घटिकाः, द्वे घटिके विभजन-फलं लभन्ते इति मुहूर्तः घटिकाद्वयपरिमितः कालः भवति। मुहूर्तो नाम ( 48 minutes ) अष्टाचत्वारिंशत् मिनिटानि।

ऋगयनादिगणे पठितेभ्यः शब्देभ्यः "तत्रभवः" इति "तस्य व्याख्यानः" इति चार्थे अण् प्रत्ययो विधीयते अणृगयनादिभ्यः इति सूत्रेण ठादयः अपवादप्रत्यया न भवन्ति इत्यर्थः। तथा च—मुहूर्तेभवः, मुहूर्तविषयस्य व्याख्यानो ( Commentary ) वा ग्रन्थः मौहूर्तः भवति न तु मौहूर्तिकः।

लिङ्चोर्द्धमौहूर्तिके ३।३।९ लिङ्चोर्ध्वमौहूर्तिके ३।३।१६४, स्मे लोट् ३।३।१६५ इति सूत्रत्रये ऊर्ध्वमौहूर्तिक शब्दः पठ्यते। ऊर्ध्वं मुहूर्ताद्भवः इत्यर्थे कालाट्ठञ् ४।३।११ इति ठञि, असामानाधिकरण्याद्, दिक्संख्यावाचकत्वाभावाच्च "तद्धितार्थोत्तरपरसमाहारे च" २।१।५१ इति समासस्य दुर्लभत्वेऽपि अत्रैव सूत्रयोः निपातनात्समासे, निष्पन्नः ऊर्ध्वमौहूर्तिकशब्दः मुहूर्ता-दुपरितनकाल इत्यर्थं बोधयति।

तत्र प्रथमसूत्रेण—मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा, अथ त्वं छन्दोऽधीष्व इति वाक्ये मुहूर्तादूर्ध्वकालभवे भविष्यत्यपि, आगच्छेत् आगच्छति इति लिङ् लटोर्विधानं करिष्यते। उपाध्यायस्य स्वगृहासत्वे तत्र समागतं, कालविलम्बेन ततः परावृत्त्य, स्वगृहम्प्रति गन्तुं प्रवृत्तं शिष्यम्प्रति गुरुपत्न्यादेरियमुक्तिः।

द्वितीयेन लिङ् चोर्ध्वमौहूर्तिके ३।३।१६४ इति सूत्रेण—मुहूर्तादूर्ध्वे यजत, यजताम्, यष्टव्यम् इत्यत्र प्राप्तकाले अप्राप्तः लिङ् विधीयते। लिङ एव विधाने तु लोटः कृत्यानां च बाधः स्यादिति च कारेण लोटः कृत्यानां च विधिः।

स्मे लोट् ३।३।१६५ इति ऊर्ध्वे मुहूर्ताधजतां स्म इत्यत्र ऊर्ध्वमौहूर्तिके, स्मशब्दोपपदे च लिङ्कृत्यान् बाधित्वा लोट् विधीयते। अत्रवाक्ये स्म शब्दः अधिकारसूचकः। भवानत्र यजनार्थमधिकृतः इत्यर्थः।

अहन् शब्दः—कालविशेष वाचकेषु अहन् शब्दः साम्राज्यपदम् अधिरोहति। पूर्वाह्ण, मध्याह्न, अपराह्ण, प्राह्ण इत्यादयः दिनावयववाचकाः शब्दाः अहन् शब्दमेव आश्रयन्ते। दिनस्य पूर्वावयवः पूर्वाह्ण शब्देन अभिधीयते, अहन् पर्यायेण दिनशब्देन सह पूर्वादिशब्दसंयोगे न तेन सः पूर्वाह्णशब्दव्यवहृतः अर्थः अभिधीयते। अश्वेन एकाहेन गन्तुं शक्यः मार्गः आश्वीनः उच्यते। एतेन अश्ववाहनस्य आधिक्यं दृश्यते। शकटया यत्र एकाहेन गम्यते तस्य मार्गस्य कृते नास्ति विशिष्टः शब्दः। पुण्याहम् सुदिनाहम् इत्यादयः शब्दाः अहन् शब्दान्ता एव। संख्यादि पूर्वस्य अहन् शब्दस्य सप्तम्याः एकवचने अहन्नादेशो विकल्पेन भवति, तेन सायाह्नि सायाहनि, सायाह्ने इति रूपत्रयं भवति। अहोरात्रः इत्यादौ अहन् शब्दस्य नकारस्य विशेषतः रुत्वम् विहितम्, तेन उत्वे अहोरूपं, अहोरात्रः इत्यादीनि रूपाणि भवन्ति।

रात्रिशब्दस्य प्रयोगः अहन् शब्देन सह रात्र्यवयववाचकैः शब्दैश्च सह क्रियेते तन अहोरात्रः, पूर्वरात्रः, अपररात्रः, मध्यरात्रः इत्यादि शब्दाः सिद्धाः। अहोरात्र शब्दस्तु कालगणनायाः मूलविभागः अस्ति। तत एव षष्टिम् अहोरात्रान् गृहीत्वा मासद्वयस्य षष्टिरात्रसंज्ञा निष्पन्ना।

रात्रिपर्यायः तमिस्रा शब्दः निशा शब्दश्च पाणिनि सूत्रेषु उपलभ्यते। निशा शब्दस्य निश् इत्यादेशे शसादौ विभक्तौ निशः इत्यपि रूपं भवति। अहर्दिव, नक्तन्दिव, रात्रिन्दिव इति शब्दाः "अचतुर विचतुर"—५।४।७७ इति सूत्रे अच् प्रत्ययान्ता निपात्यन्ते।

उषो देवता अस्य इत्यर्थे उषस् शब्दात् यत् प्रत्यये उषस्यम् इति रूपं भवति। कण्डवादिषु उषस्=प्रभातीभावे इत्यस्ति धातुः। कण्डवादीनि प्रातिपदिकानि धातवश्च भवन्ति। तेन उषस्, उषस्यति इति द्वयं सिद्ध्यति। स्वरादिनिपातमव्ययम् १।१।३७ इत्यत्र स्वरादेः आकृतिगणत्वात् उषाशब्दः तत्र गण्यते। व्युष्टशब्दः व्युष्टे दीयते अथवा व्युष्टे कार्यम् इत्यर्थयोः वैयुष्टम् इति रूपं साधयति। व्युष्टशब्दस्य रात्रेश्चतुर्थः प्रहरः इत्यर्थोऽस्ति। निशायाः प्रारम्भकालः प्रदोषशब्देन व्यवह्रियते। सायंप्रातर्शब्दात् ठञ् प्रत्यये ४।३।११ भवाद्यर्थेषु सायंप्रातिकशब्दः निष्पद्यते।

अहोरात्रयोः सन्धिकालः "सन्धिवेला" शब्देन उच्यते। सन्धिवेलादि गणे ४।३।१६ सन्ध्या, अमावास्या, त्रयोदशी, चतुर्दशी, पञ्चदशी, पौर्णमासी, प्रतिपद्, संवत्सर इत्यादयः शब्दाः पठ्यन्ते। पञ्चदशी शब्देन पौर्णमासी अमावस्या वा गृह्यते। मार्गशीर्षपौर्णमास्याः नाम आग्रहायणी इति सुप्रसिद्धम्। तत्र देयं ऋणम् आग्रहायणिकम् आग्रहायणकम् इति वा भवति।

नभस्, तपस्, सहस्, मधु एभ्यः शब्देभ्यः मत्वर्थे नभस्यः, तपस्यः, सहस्यः, मधव्यः इति शब्दाः वेदे एव व्यवह्रियन्ते। वयोबोधनार्थम् मास्यः, मासीनः द्विमास्यः, इत्यादयः शब्दाः सिद्ध्यन्ति। वयोवाचकाभावे मासिकः इतिरूपं भवति। संख्यावाचकेभ्यः यथा शततमादि रूपाणि भवन्ति, तथा मासार्धमाससंवत्सरेभ्यः परस्य डटः नित्यं तमडागमे मासस्य पूरणः मासतमः,

अर्धमासस्य पूरणः अर्धमासतमः, संवत्सरस्य पूरणः संवत्सरतमः इति रूपाणि तेषां पूरणम् अवयवम् बोधयन्ति। षण्मासशब्दात् वयोबोधनार्थं ण्यति, यपि, ठञि च षाण्मास्यः, षण्मास्यः, षाण्मासिकः इति रूपाणि भवन्ति। पक्षस्य मूलतिथिः प्रतिपद् पक्षति शब्देन उच्चते।

वत्सर, संवत्सर, वर्ष, संवत्, हायन, समा इति वर्षवाचकानां शब्दानां व्यवहारः पाणिनिना कृतः।

ऋतुशब्दस्य सामान्येन, वसंत, ग्रीष्म, वर्षा, प्रावृष्, शरद्, हेमन्त, शिशिर इति ऋतु-विशेषरूपेण च व्यवहारः सूत्रेषु उपलभ्यते। न्यङ् क्वादिषु निपूर्वस्य दहेः घकारान्तादेशे साधितः निदाघशब्दः दृश्यते। अयनशब्दस्य अयनंच ८।४।२५ इति सूत्रेण णत्वम् विधीयते। त्रिभिः ऋतुभिः सम्पद्यते अयनमेकम्। अन्तरयणम् इति शब्दस्य प्रयोगः देशे अभिधेयेणत्व विशिष्टः न भवति।

वर्तमानभूतभविष्यद्वाचकाः अद्यतनानद्यतनादि बोधकाश्च शब्दाः पाणिनिना बहुत्र उपयुक्ताः। तेषु तेषु अधिकारेषु च विविधानां प्रत्ययानां विधानं विस्तरेण कृतं। तस्य विविधं विवरणं यथासमयं करिष्यते। ह्यस्श्वसादिशब्दा अपि तदैव व्याख्यास्यन्ते।

अथ कालविशेषवाचकशब्दसूची पुरस्ताद् दीयते—

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | ( मुहूर्तः ) | | | |
| १ | अणृगयनादिभ्यः | ४।३।७३ | ऋगयनादिगणपठितेभ्यः शब्देभ्यः "तत्र भवः" इत्यर्थे, "तस्य व्याख्यान" इत्यर्थे च ठगाद्यपवादः अण्प्रत्ययो भवति | ( ऋगयने भवः, ऋगयनस्य व्याख्यानो वा आर्गयनः ) मुहूर्ते भवः मुहूर्तस्य व्याख्यानो वा मौहूर्तः । |
| २ | लिङ्चोर्ध्वमौहूर्तिके | ३।३।९ | ऊर्ध्वमौहूर्तिके भविष्यति, विध्यादौ लेट्-प्रत्ययार्थ चिह्ने विद्यमाने सति धातोः लिङ्लटौ स्तः, पक्षे यथाप्राप्तं लृट्लुटौ | ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति आगन्ता वा, त्वंछन्दोऽधीष्व । |
| ३ | लिङ्चोर्ध्वमौहूर्तिके | ३।३।१६४ | ऊर्ध्वमौहूर्तिके प्रैषादिषु गम्यमानेषु धातोः लिङ्, लोट्, कृत्याश्च भवन्ति । | मुहूर्तादूर्ध्वं यजेत, यजताम्, यष्टव्यम् । |
| ४ | स्मे लोट् | ३।३।१६५ | मुहूर्तादुपरितनकाले प्रैषातिसर्गप्राप्तकालेषु लोडेव स्यात् न तु लिङ्कृत्याश्च । | ऊध्द्वं मुहूर्ताद् यजतां स्म । मुहूर्तादूर्ध्वं भवान् करं करोतु स्म । |
| | ( अहन् ) | | | |
| ५ | रात्राह्नाहाः पुंसि | २।४।२९ | रात्र, अह्न, अह इत्येतदन्तः द्वन्द्वः, तत्पुरुषश्च पुंसि प्रयुज्यते । | पूर्वाह्णः, मध्याह्नः, अपराह्णः, द्व्यहः, त्र्यहः |
| ६ | दिवाविभानिशाप्रभाभास्कारान्तानन्तादि बहुनान्दी किंलिपि लिबिबलिभक्तिचित्रक्षत्रसंख्या जङ्घाबाह्व हर्यत्तद्धनुरुष्षु | ३।२।२१ | दिवादिषु उपपदेषु करोतेः टप्रत्ययो भवति । | अहः करोतीति–अहस्करः ( कस्कादिषुच ८।३।४८ इति सः) |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| ७ | बह्वादिभ्यश्च | ४।१।४५ | बह्वादिभ्यः स्त्रियां ङीष् | दीर्घाह्नी, दीर्घाहा–शरद्। केचिद् अह्वीअहा इत्यपि उदाहरन्ति |
| ८ | ग्रामजन बन्धु सहायेभ्यस्तल् (वार्तिकम्)<br>अह्नः खः क्रतौ | ४।२।४३ | क्रतौ विद्यमानात् अहन्शब्दात् खः समूहेऽर्थे। | अह्नां समूहः अहीनः। क्रत्वर्थाभावे समूहे अञि (४।२।४५) आह्नः |
| ९ | खण्डिकादिभ्यश्च | ४।२।४५ | खण्डिकादिभ्यः समुदाये अञ्। | अह्नां समूहः आह्नः। |
| १० | सङ्कलादिभ्यश्च | ४।२।७५ | सङ्कलादिभ्यः चातुरर्थिकः अञ्। | अह्ना निर्वृत्तः आह्नः देशः। |
| ११ | ओजसोऽहनि यत्खौ | ४।४।१३० | अहनि वाच्ये ओजः शब्दात् यत्खौ प्रत्ययौ। | ओजस्यमहः, ओजसीनमहः |
| १२ | रात्र्यहस्संवत्सराच्च | ५।१।८७ | रात्रि, अहन्, संवत्सर एतदन्ताद् द्विगोः खः वा, पक्षे ठञ् निर्वृत्तेऽर्थे। | द्विरात्रीणः–द्वैरात्रिकः, द्व्यहीनः–द्वैयाह्निकः, द्विसंवत्सरीणः–द्विसांवत्सरिकः। |
| १३ | अश्वस्यैकाहगमः | ५।२।१९ | अश्वशब्दात् खञ् एकाहगम इत्यर्थे। | आश्वीनः अध्वा। अश्वेन एकाहेन गन्तुं शक्य इत्यर्थः। |
| १४ | अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः (वार्तिकम्)<br>अहर्ग्रहणं द्वन्द्वार्थम् | ५।४।८७ | अहन्, सर्व, एकदेश, संख्यात, पुण्य, संख्या, अव्यय एभ्यः परस्य रात्रेः समासान्तः अच्।<br>अहन् शब्दात् केवलं द्वन्द्वे एव। | सर्वरात्रः, पूर्वरात्रः, संख्यातरात्रः, पुण्यरात्रः द्विरात्रम्, अतिरात्रः, अहोरात्रः<br>अहश्च रात्रिश्च अहोरात्रः। |

| | | | | |
|---|---|---|---|---|
| १५ | अह्नोऽह्न एतेभ्यः | ५।४।८८ | संख्या, अव्यय, सर्व, एकदेशवाचकशब्द, संख्यात, पुण्य एभ्यः परस्य अहन्शब्दस्य समासान्तः अह्नादेशः । | द्व्यह्न, अत्यह्नः, सर्वाह्नः । |
| १६ | न संख्यादेः समाहारे | ५।४।८९ | संख्यावाचकात् परस्य अहन्शब्दस्य समाहारद्विगौ न अह्नादेशः | द्वयोरह्नोः समाहारो द्व्यहः । |
| १७ | उत्तमैकाभ्यां च | ५।४।९० | पुण्य, एक आभ्यां परस्य अहन् शब्दस्य न अह्नादेशः | पुण्याहम्, एकाहः । |
| १८ | राजाहः सखिभ्यष्टच् | ५।४।९१ | राजन्, अहन्, सखि एतदन्ता तत्पुरुषात्समासान्तः टच् । | महाराजः, मद्रराजः, उत्तमाहः, राजसखः |
| १९ | कृत्योकेष्णुच्चार्वादयश्च<br>( गणसूत्रम् )<br>राजाह्नोश्छन्दसि | ६।२।१६० | नञः परे कृत्य, उक, इष्णुच् इत्येवमन्ता चार्वादयश्च अन्तोदात्ताः ।<br>नञः परयोः राजाह्नोः छन्दसि अन्तोदात्तम् | अराजा, अनहः । भाषायां नञः स्वर एव । |
| २० | संख्याविसाय पूर्वस्याह्नस्याहनन्यतरस्यां ङौ | ६।३।११० | संख्याविसायपूर्वस्य अह्नस्य ङि विभक्तौ अहन्आदेशो वा भवति । | द्व्यह्नि, द्व्याहनि, द्व्यह्ने, व्यह्नि-व्यहनि-व्यह्ने सायाह्नि-सायाहनि-सायाह्ने । (स्यतेर्घञि सायशब्दोऽकारान्तोऽस्मादेव लिङ्गादहरवमानवाचक इति पदमञ्जर्यां हरदत्तः, अतएव "सायमण्डनमभित्वरयन्त्य" इति कविप्रयोगोऽपि संगच्छते । |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| २१ | अह्नष्टखोरेव | ६।४।१४५ | टखोः प्रत्यययोः परत एव अहन्नित्यस्य टिलोपो भवति | द्व्यहः–त्र्यहः, द्व्यहीनः, त्र्यहीनः, टखोरेव इति नियमात् अह्ना निर्वृत्तमित्यत्रठञि (४।३।११) आह्निकमिति । |
| २२ | अहन् | ८।२।६८ | अहन्नित्यस्य पदस्य रुः भवति | अहोभ्याम्, अहोभिः । |
| | (वार्तिकम्) रुविद्यावह्नो रूपरात्रिरथन्तरेषूपसंख्यानं कर्तव्यम् | | अहन् इति नकारस्य रुत्वम् रूपरात्रि रथन्तरेषु-परेषु । | अहोरूपम्, अहोरात्रः, अहोरथन्तरम् |
| २३ | रोऽसुपि | ८।२।६९ | अहन् इत्येतस्य रेफादेशो भवति, सुपि तु न भवति | अहर्ददाति, अहर्भाति । अत्र रुत्वे तु ततः उत्वे अहोभातीति स्यात् । |
| २४ | अम्नरूधरपरित्युभयथा छन्दसि (वार्तिकम्) अहरादीनां पत्यादिषूपसंख्यानं कर्तव्यम् | ८।२।७० | अहरादीनां रेफस्य रेफः पत्यादिषु । रेफस्य रेफविधानम् एकदा विसर्गबाधनार्थम् । | अहर्पतिः । पक्षे विसर्गोपध्मानीयौ (८।३।३१) अहः पतिः अहं पतिः । |
| २५ | अह्नोऽदन्तात् | ८।४।७ | ह्रस्वाकारान्तपूर्वपदस्थरेफात् परस्य अह्नो नकारस्य णत्वं भवति । | पूर्वाह्णः, अपराह्णः । अदन्तपूर्वपदाभावात् नणत्वम्–निरह्नः, दुरह्नः । |
| २६ | प्रातिपदिकान्तनुमिवभक्तिषु च (वार्तिक) युवादीनां प्रतिषेधो वक्तव्यः | ८।४।११ | युवादीनां नकारस्य न णत्वम् । | दीर्घाह्नी शरद् । |

| | | | | |
|---|---|---|---|---|
| | (रात्रिः) | | | |
| | रात्राह्नाहाः पुंसि | २।४।२९ | व्याख्यातम् प्राक् | अहोरात्रः, पूर्वरात्रः |
| २७ | रात्रेश्चाजसौ | ४।१।३१ | रात्रिशब्दान्ङीप् अजस्विषये । वैदिकं सूत्रम् | रात्री सृष्टा, रात्रीभिः । लोके तु "कृदिकारादक्तिनः" (४।१।४५ गणसूत्रम्) इतिङीष्यन्तोदात्तः । |
| | रात्र्यहः संवत्सराच्च | ५।१।८७ | व्याख्यातम् प्राक् | द्विरात्रीणः, द्वैरात्रिकः |
| | अहः सर्वैकदेश पुण्याच्च रात्रेः | ५।४।८७ | प्राग् व्याख्यातम् | अहोरात्रः, सर्वरात्रः इत्यादि |
| २८ | रात्रेः कृति विभाषा | ६।३।७२ | कृत्प्रत्ययान्ते उत्तरपदे रात्रिशब्दस्य विकल्पेन नुम् । | रात्रिञ्चरः, रात्रिचरः |
| | (वार्तिकम्) | | | |
| | रात्रेरप्राप्ते ज्योतिर्जनपदरात्रिनाभिनाम | | समानशब्दस्य सकारादेशः | सरात्रिः |
| २९ | गोत्ररूपस्थानवर्णवयोवचन बन्धुषु | ६।३।८५ | ज्योतिर्जनपदरात्र्याद्युत्तरपदेषु परतः | |
| | अहन् | ८।२।६८ | व्याख्यातं प्राक् | |
| | (वार्तिकम्) | | | |
| | रुविधावह्नोरूपरात्रिरथन्तरेषूपसंख्यानम् | | रुत्वम् | अहोरात्रः |
| | (पूर्वाह्ण) | | | |
| ३० | विभाषा पूर्वाह्णापराह्णाभ्याम् | ४।३।२४ | पूर्वाह्णपराह्णाभ्यां शेषे ट्युट्युलौ तयोस्तुट् च आगमः, पक्षे ठञ् | पूर्वाह्णेतनम्, पौर्वाह्णिकम् |

| शब्दसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| ११ | पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् | ४।३।२८ | पूर्वाह्ण, अपराह्ण, आर्द्रा मूल, प्रदोष, अवस्कार एभ्यः जात इत्यर्थे वुन्। | पूर्वाह्णकः |
| | ( अपराह्ण ) | | | |
| | विभाषा पूर्वाह्णापराह्णाभ्याम् | ४।३।२४ | व्याख्यातम् | अपराह्णतनम्, आपराह्णिकम् |
| | पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् | ४।३।२८ | व्याख्यातम् | अपराह्णकः |
| १२ | महान्व्रीह्यपराह्ण गृष्टीष्वासजाबाल भारभारतहैलि हिल रौरवप्रवृद्धेषु | ६।२।३८ | महद् इति पूर्वपदं प्रकृतिस्वरं व्रीह्याद्युत्तरपदेषु | महापराह्णः |
| १३ | अर्धर्चाः पुंसिच | २।४।३१ | अर्धर्चादयः शब्दाः पुंसि नपुंसके चस्युः। | अपराह्णः, अपराह्णम् |
| | ( प्राह्ण ) | | | |
| १४ | सायंचिरं प्राह्णे प्रगेऽव्यये भ्यष्ट्युट्युलौ तुट् च | ४।३।२३ | सायं, चिरं, प्राह्णे, प्रगे इति चतुर्भ्यः अव्ययेभ्यश्च कालवाचिभ्यः ट्युट्युलौ तयोस्तुट् च। | प्राह्णेतनम् ( एदन्तत्वं निपातनात् ) |
| १५ | तिष्ठद्गुप्रभृतीनि च | २।१।१७ | तिष्ठद्गुप्रभृतीनि शब्दरूपाणि निपात्यन्ते | प्राह्णम्। प्रगतत्वमह्नां, प्रगतमह इति वा। निपातनादह्णादेशः। |
| | (तमिस्रा) | | | |
| १६ | ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः | ५।२।११४ | ज्योत्स्नादयो मत्वर्थे निपात्यन्ते। | तमः अस्यास्तीति विग्रहे तमस्शब्दाद्रक्प्रत्यये उपधाभूतस्य मकाराद्कारस्य इत्वे–तमिस्रा इति। |

| | | | | |
|---|---|---|---|---|
| | (निशा.) | | | |
| ३७ | विभाषासेनासुराच्छायाशालानि शानाम् | | सेना, सुरा, छाया, शाला, निशा एतदन्तः तत्पुरुषः क्लीबे वा पक्षे स्त्रियां नञ्तत्पुरुषकर्मधारययोरभावे । | श्वनिशम्, श्वनिशा । |
| | दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दी किं लिपिलिबिबलिभक्तिकर्तृच्चित्रसंख्या जङ्घाबाह्वर्यत्तद्धनुरुष्षु | ३।२।२१ | व्याख्यातं प्राक् | निशाकरः |
| ३८ | निशाप्रदोषाभ्यां च | ४।३।१४ | निशाप्रदोषाभ्यां शेषे ठञ् वा | नैशम्, नैशिकम् |
| ३९ | पद्दनो मास्हृन्निशसन्यूषन्दोषन्यकञ्शकन्नुदन्नासञ्छस् प्रभृतिषु | ६।१।६३ | पादादीनी स्थाने पदादयः स्युः शसादौ वा | ( निशाया–निश् ) निशाः–निशः । |
| | (अहोरात्रावयव) | | | |
| ४० | परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु | ६।२।३३ | परिप्रत्युपापा प्रकृतिस्वराः ( वैदिकं सूत्रम् ) | प्रतिपूर्वाह्णम्, प्रतिपूर्वरात्रम्, |
| ४१ | क्तेनाहोरात्रावयवाः | २।१।४५ | अहरवयवा, रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन समस्यन्ते स च तत्पुरुषः। | पूर्वाह्णकृतम् अपराह्णकृतम् । |
| | (अहोरात्र) | | | |
| ४२ | हेमन्तशिशिरावहोरात्रे चच्छन्दासि | २।४।२८ | छन्दसि पूर्ववल्लिङ्गम्। | अहोरात्रे इदं ब्रूमः । |
| | (अनहोरात्र) | | | |
| ४३ | कालविभागे चानहोरात्राणाम् | ३।३।१३७ | कालमर्यादाविभागे सति अवरस्मिन् प्रविभागे भविष्यति अनद्यतनवन्न, न चेदहोरात्रसम्बन्धी प्रविभागः । | योऽयं वत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रस्तत्राध्येतास्महे । |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | ( षष्टिरात्र) | | | |
| ४४ | षष्टिकाः षष्टिरात्रेण पच्यन्ते | ५।१।९० | तृतीयान्तात् षष्टिरात्रशब्दात्कन् रात्रशब्दलोपश्च निपात्यते। | षष्टिरात्रेण पच्चन्ते–षष्टिकाः ( धान्यविशेषस्य संज्ञा ) |
| | अर्धर्चाः पुंसि च ( अहर्दिव, नक्तन्दिव, रात्रिन्दिव ) | २।४।३१ | व्याख्यातम् | षष्टिकः, षष्टिकम् |
| ४५ | अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वडुहक्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः। | ५।४।७७ | अचतुरादयः अच्प्रत्ययान्ता निपात्यन्ते | नक्तं च दिवा च–नक्तन्दिवम् अहनि च दिवा च–अहर्दिवम् रात्रौ च दिवा च– रात्रिन्दिवम्। |
| | ( उषस्) | | | |
| ४६ | वाय्वृतु पित्रुषसो यत् | ४।२।३१ | वायु, ऋतु, पितृ, उषस् एभ्यः सास्यदेवता इत्यर्थे यत् | उषो देवता अस्येति उषस्यम् |
| ४७ | सोर्मनसी अलोमोषसी | ६।२।११७ | सोरुत्तरं मन्नन्तमसन्तं च बहुव्रीहौ आद्युदात्तं लोमोषसी वर्जयित्वा। वैदिकम् | सुकर्मा, सुयशाः। अलोमोषसीत्युक्तत्वात्–सूषाः इत्यत्र न। |
| ४८ | उषासोषसः | ६।३।३१ | देवताद्वन्द्वे उषस उषासादेशः उत्तरपदे। | उषासासूर्यम्, उषासानक्तम् |

| | | | | |
|---|---|---|---|---|
| ४९ | कण्डवादिभ्यो यक् | ३।१।२७ | कण्डवादिभ्यो नित्यं यक्स्यात् स्वार्थे । उषस्–प्रभातीभावे | उषस्यति, उषस् |
| ५० | स्वरादिनिपातमव्ययम् | १।१।३७ | स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । | आकृतिगणोऽयम्–उषा |
| | (व्युष्ट) | | | |
| ५१ | व्युष्टादिभ्योऽण् | ५।१।९७ | व्युष्टादिभ्योऽण् दीयते, कार्यमित्येतयोरर्थयीः | व्युष्टे दीयते, व्युष्टे कार्यं वा वैयुष्टम् |
| | (प्रदोष) | | | |
| | निशाप्रदोषाभ्यां च | ४।३।१४ | व्याख्यातम् | प्रादोषिकम्–प्रादोषम् |
| | पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद् वुन् | ४।३।२८ | व्याख्यातम् | प्रदोषकः |
| | (सायम्) | | | |
| | सायंचिरंप्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च | ४।३।२३ | व्याख्यातम् | सायन्तनम् |
| | (सायंप्रातिक) | | | |
| ५२ | नस्तद्धिते | ६।४।१४४ | "अव्ययानां च" इति वचनं सायंप्रातिकादि प्रयोगार्थम् | सायंप्रातर् शब्दात् ठञि सायंप्रातिकः । |
| | (वार्तिकम्) सायंप्रातिकाद्यर्थम् | | | |
| | (सन्धिवेला) | | | |
| ५३ | सन्धिवेलाधृतुनक्षत्रेभ्योऽण् | ४।३।१६ | सन्धिवेलादिभ्यः ऋतुभ्यः नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात् | सन्धिवेलायां भवं सान्धिवेलम् । |
| | अत्रैवसन्धिवेलादिगणे— (१) सन्ध्या, (२) अमावास्या, (३) त्रयोदशी, (४) चतुर्दशी, (५) पंचदशी, (६) पौर्णमासी, (७) प्रतिपद्, (८) संवत्सरात्फलपर्वणोः । | | | सान्ध्यम्, आमावास्यम्, त्रायोदशम्, पांचदशम्, पौर्णमासम्, प्रातिपदम् । सांवत्सरं–फलं, पर्व वा, सांवत्सरिकमन्यत् । |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | ( पौर्णमासी ) | | | |
| ५४ | सास्मिन्पौर्णमासीति संज्ञायाम् | ४।२।२१ | सा पौर्णमासी अस्मिन्नित्यर्थे अण् प्रत्ययः मासार्धमास संवत्सराणां संज्ञायाम् । | पौषी पौर्णमासी अस्मिन्पौषो मासः । |
| ५५ | नदीपौर्णमास्याग्रहायणीभ्यः | ५।४।११० | नदी, पौर्णमासी, आग्रहायणी इत्येतदन्ताद्व्ययीभावात्समासान्तः टच् वा | उपपौर्णमातम्, उपपौर्णमासि । |
| | ( अमावस्या ) | | | |
| ५६ | अमावस्यदन्यतरस्याम् | ३।१।१२२ | अमोपपदाद्वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते | अमा सह वसतोऽस्यां चन्द्रार्कौ–अमावास्या, अमावस्या |
| | ( अमावास्या ) | | | |
| ५७ | अमावास्याया वा | ४।३।३० | अमावास्याशब्दाद् वुन् जात इत्यर्थे | अमावास्यकः, आमावास्यः एकदेशविकृतस्यानव्यत्वाद् अमावस्यशब्दादपि–अमावस्यकः, आमावस्यः । |
| | ( आग्रहायणी ) | | | |
| ५८ | आग्रहायण्यश्वत्थाट्ठक् | ४।२।२२ | आग्रहायण्य श्वत्थाभ्यां पौर्णमास्युपाधिकात् ठक् अस्मिन्निति सप्तम्यर्थे | आग्रहायणिको मासः, अर्द्धमासः, संत्वसरः |
| ५९ | संवत्सराग्रहायणीभ्यां ठञ्च | ४।३।५० | देयमृणे इत्याभिन्नर्थे संवत्सराग्रहायणीभ्यां ठञ् चकाराद् वुञ् । | ( संवत्सरे देयमृणम्–सांवत्सरिकम्–सांवत्सरिकम्–सांवत्सरकम् ) आग्रहायणिकम्–आग्रहायणकम् । |
| | नदी पौर्णमास्याग्रहायणीभ्यः | ५।४।११० | व्याख्यातम् | उपाग्रहायणम्, उपाग्रहायणि |

| | | | | |
|---|---|---|---|---|
| | ( मास ) | | | |
| ६० | मत्वर्थे मासतन्वोः | ४।४।१२८ | मत्वर्थे मासतन्वोः यत् प्रत्ययः। वैदिकं सूत्रम् | नभस्यः तपस्यः, सहस्यः, मधव्यः |
| ६१ | मधोर्ञ च | ४।४।१२९ | मधोर्ञयतौ मत्वर्थे। वैदिकं सूत्रम् | माधवः मधव्यः |
| ६२ | मासाद्वयसि यत्खञौ | ५।१।८१ | मासाद् वयसि यत्खञौ भूत इत्यर्थे | मासं भूतो–मास्यः, मासीनः, वयसीतिकिम् –मासिकम्। |
| ६३ | द्विगोर्यप् | ५।१।८२ | मासान्ताद् द्विगोर्यप् वयसि। | द्विमास्यः, त्रिमास्यः। |
| ६४ | नित्यं शतादिमासार्द्धमाससम्वत्सराच्च | ५।२।५७ | शतादिभ्यो मासार्द्धमाससंवत्सरेभ्यश्च परस्य डटो नित्यं तमडागमः | मासस्य पूरणो–मासतमः, अर्द्धमासतमः, संवत्सरतमः |
| | पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुद-न्नासञ्छस्प्रभृतिषु | ६।१।६३ | व्याख्यातम् | मासः, मासान् |
| | (अर्द्धमास) | | | |
| | नित्यं शतादि मासार्ध माससंवत्सराच्च | ५।२।५७ | व्याख्यातम् | अर्द्धमासतमः |
| | (पूर्णमास) | | | |
| ६५ | महाराजप्रोष्ठपदाट्ठञ् | ४।२।३५ | सास्यदेवता इत्यर्थे पूर्णमासाद् अण् प्रत्ययः | पूर्णमासोऽस्यां वर्तते पौर्णमासी तिथिः। |
| | (वार्तिकम्) पूर्णमासादण् | | | |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | **(षण्मास)** | | | |
| ६६ | षण्मासाण्ण्यच्च | ५।१।८३ | षण्मासाण्ण्यत् यप् च वयसि औत्सर्गिकः ठञपि। | षाण्मास्यः, षण्मास्यः, षाण्मासिकः |
| ६७ | अवयसि ठंश्च | ५।१।८४ | षण्मासात् ठन् अवयसि चकारात् ण्यः। | षण्मासिको रोगः, षाण्मास्यः |
| | **(पक्ष)** | | | |
| ६८ | पक्षात्तिः | ५।२।२५ | पक्षशब्दान्मूलेवाच्ये तिप्रत्ययः। | पक्षस्य मूलं पक्षतिः-प्रतिपद् |
| ६९ | दिगादिभ्यो यत् | ४।३।५४ | दिगादिभ्यो यत् भवेऽर्थे | पक्ष्य |
| | **(वत्सर)** | | | |
| ७० | वत्सरान्ताच्छश्छन्दसि | ५।१।९१ | वत्सरान्तात् निर्वृत्तादिष्वर्थेषु छन्दसि छः। (वैदिकं सूत्रम्) | इद्वत्सरीयः, इदावत्सरीयः |
| | **(संवत्सर)** | | | |
| | संवत्सराग्रहायणीभ्यां ठञ् च | ४।३।५० | व्याख्यातम् | संवत्सरे देयमृणम्-सांवत्सरिकम्, सांवत्सरकम् |
| | रात्र्यहः संवत्सराच्च | ५।१।८७ | व्याख्यातम् | द्विसंवत्सरीणः, द्विसांवत्सरिकः |
| | नित्यं शतादिमासार्द्धमाससंवत्सराच्च | ५।२।५३ | व्याख्यातम् | संवत्सरतमः |
| ७१ | संख्यायाः संवत्सरसंख्यस्य च | ७।३।१५ | तद्धिते ञिति णिति किति च संख्याया उत्तर-पदस्य संवत्सरशब्दस्य, संख्यायाश्चाचामादे रचः वृद्धिः | द्वौ संवत्सरौ अधीष्टो भृतो भूतो भावी च द्विसांवत्सरिकः। |

| | | | | |
|---|---|---|---|---|
| | (वर्ष) | | | |
| ७२ | वर्षाल्लुक् च | ५।१।८८ | वर्षान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु वा खः, पक्षे ठञ् तयोश्च लुक्। | द्विवर्षीणो व्याधिः, द्विवार्षिकः, द्विवर्षः। |
| ७३ | चित्तवति नित्यम् | ५।१।८९ | वर्षान्ताद्द्विगोः प्रत्ययस्य नित्यं लुक्, चित्तवति अभिधेये। | द्विवर्षो दारकः |
| ७४ | विभाषावर्षक्षरशरवरात् | ६।३।१६ | वर्षक्षरशरवरइत्येतेभ्यः उत्तरस्याः सप्तम्याः जे उत्तरपदेऽलुक्। | वर्षेजः, वर्षजः |
| ७५ | वर्षस्याभविष्यति | ७।३।१६ | संख्योत्तरस्य वर्षस्यादेरचो वृद्धिः तद्धिते ञिति, णिति किति च सचेत्तद्धिती भविष्यत्यर्थे न भवति | द्विवार्षिकः, त्रिवार्षिकः |
| | (संवत्) | | | |
| | स्वरादिनि पातमव्ययम् | १।१।३७ | स्वरादयो निपाताश्चाव्ययसंज्ञाः | सवत्=वर्षे |
| | (हायनान्त) | | | |
| ७६ | दामहायनान्ताच्च | ४।१।२७ | संख्यादेर्बहुव्रीहेर्दामान्ताद् हायनान्ताच्च। स्त्रियां ङीप् | द्विहायनी, त्रिहायणी गौः। |
| | (वार्तिकम्) | | | |
| | हायनो वयसि स्मृतः | | वयोवाचकस्यैवहायनस्य ग्रहणम् | द्विहायना, त्रिहायना शाला |
| | (वचनम्) | | | |
| | त्रिचतुर्भ्यां हायनस्य णत्वम् | | वयस्येव णत्वम् | त्रिहायणी, चतुर्हायणी |
| ७७ | हायनान्तयुवादिभ्योऽण् | | भावकर्मणोः हायनान्तेभ्यः युवादिभ्यश्च अण्। | द्विहायनस्य भावः कर्म वा द्वैहायनम्। त्रैहायनम्। |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | (समा) | | | |
| ७८ | ग्रीष्मावरसमाद् वुञ् | ४।३।४९ | ग्रीष्मावरसमशब्दाभ्यां वुञ्, देयमृणे इत्यर्थे। | आवरसमकम्, अवरसमा = अवरवर्षम्। |
| ७९ | समायाः खः | ५।१।८५ | समाशब्दाद् अधीष्टादिष्वर्थेषु खः प्रत्ययः | समामधीष्टो भृतो भूतो भावीवा समीनः। |
| ८० | द्विगोर्वा | ५।१।८६ | समान्ताद् द्विगोः खः पक्षे ठञपि | द्विसमीनः, द्वैसमिकः |
| ८१ | समां समां विजायते | ५।२।१२ | यलोपः अवशिष्टविभक्तेश्च अलुक् निपात्यते। | समां समां विजायते समां समीना गौः |
| | (अनुसंवत्सर) | | | |
| ८२ | अनुशतिकादीनां च | ७।३।२० | अनुशतिकादीनामुत्तरपदस्य पूर्वपदस्ययाचामादेरचो वृद्धिः तद्धिते जिति णिति किति च। | अनुसंवत्सरेण दीयते आनुसांवत्सरिकः। |
| | (ऋतु) | | | |
| | वाय्वृतुपित्रुषसो यत् | ४।२।३१ | व्याख्यातम् | ऋतव्यम् |
| | सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् | ४।३।१६ | व्याख्यातम् | ऋतुभ्यः-ग्रैष्मम्, शैशिरम्। |
| ८३ | ऋतोरण् | ५।१।१०५ | ऋतुशब्दात् षष्ठ्यर्थे अण् तदस्य प्राप्तमिति विषये। | ऋतुः प्राप्तोऽस्य-आर्तवम् पुष्पम्। |
| ८४ | छन्दसि घस् (वैदिकं सूत्रम्) | ५।१।१०६ | छन्दसि ऋतोः घस् | अयं ते योनि"र्ऋत्वियः"। |
| ८५ | अवयवादृतोः | ७।३।११ | अवयववाचिनः परस्य ऋतुवाचिनः उत्तरपदस्याचामादेरचो वृद्धिः जिति णिति किति चतद्धिते परतः। | अपरहैमनम्, पूर्वहैमनम् |

| | | | | |
|---|---|---|---|---|
| | (ऋत्व्य) | | | |
| ८६ | ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानिच्छन्दसि | ६।४।१७५ | ऋत्व्यादीनि निपात्यन्ते छन्दसि (वैदिकं सूत्रम्) | ऋतौ भवम्–ऋत्व्यम् |
| | (वसन्त) | | | |
| ८७ | वसन्ताच्च | ४।३।२० | वसन्ताच्छन्दसि ठञ् शेषे (वैदिकं सूत्रम्) | वासन्तिकौ ऋतू |
| ८८ | ग्रीष्मवसन्तादन्यतरस्याम् | ४।३।४६ | उप्तेऽर्थे ग्रीष्मवसन्ताभ्यां वुञ् वा। पक्षे अण् | वासन्तकम्, वासन्तम् |
| | (ग्रीष्म) | | | |
| | ग्रीष्मवसन्तादन्यतरस्याम् | ४।३।४६ | व्याख्यातम् | ग्रैष्मकम्–ग्रैष्मम् सस्यम् |
| | ग्रीष्मावरसमाद् वुञ् | ४।३।४९ | व्याख्यातम् | ग्रीष्मे देयमृणम्–ग्रैष्मकम् |
| | (निदाघ) | | | |
| ९० | न्यङ्क्वादिनां च | ७।३।५३ | न्यङ्कु इत्यादीनां कवर्गादेशः | निदाघः (निपूर्वस्य दहेर्निदाघः) |
| | (वर्षा) | | | |
| ९१ | वर्षाभ्यष्ठक् | ४।३।१८ | वर्षशब्दात् शेषे ठक् | वार्षिकं वासः, वार्षिकमनुलेपनम् |
| | (प्रावृष्) | | | |
| ९२ | प्रावृष् एण्यः | ४।३।१७ | प्रावृष्शब्दादेण्यः शेषे | प्रावृषेण्यः |
| ९३ | प्रावृषष्ठप् | ४।३।२६ | प्रावृषः ठप् जातेऽर्थे | प्रावृषिकः |
| ९४ | प्रावृट्शरत्कालदिवां जे | ६।२।१५ | प्रावृट्शरत्कालदिवां जे उत्तरपदे उत्तरस्याः सप्तम्याः अलुक् बहुलम् | प्रावृषिजः |

| क्रमसंख्या | सूत्रम् | सूत्राङ्कः | सूत्रार्थः | उदाहरणम् |
|---|---|---|---|---|
| | ( शरद् ) | | | |
| ९५ | श्राद्धे शरदः | ४।३।१२ | शरदः ठञ् शेषे श्राद्धे वाच्ये | शारदिकं श्राद्धम्, शारदमन्यत् । |
| ९६ | विभाषारोगातपयोः | ४।३।१३ | शरदः ठञ् शेषे रोगे आतपे चाभिधेये | शारदिको रोगः शारदो रोगः<br>शारदिक आतपः शारदः आतपः |
| ९७ | संज्ञायां शरदो वुञ् | ४।३।२७ | जातेऽर्थे वुञ् शरदः सप्तम्यन्तात् । | शारदका दर्भाः मुद्गाः वा |
| ९८ | अव्ययीभावे शरत्प्रभृतिभ्यः | ५।४।१०७ | शरदादिभ्यः अव्ययीभावे टच् समासान्तः | उपशरदम्, प्रति शरदम् |
| | प्रावृट्शरत्कालदिवां जे | ६।३।१५ | व्याख्यातम् | शरदिजः |
| | ( हेमन्त ) | | | |
| ९९ | हेमन्तशिशिरावहोरात्रे च च्छन्दसि | २।४।२८ | हेमन्तशिशिरयोः अहोरात्रे इत्येतस्य च छन्दसि पूर्ववल्लिङ्गम् ( वैदिकं सूत्रम् ) | हेमन्तशिशिरावृतूनां प्रीणामि । |
| १०० | हेमन्ताच्च | ४।३।२१ | छन्दसि शेषे ठञ् ( वैदिकं सूत्रम् ) | सहश्च सहस्यश्च हैमन्तिकावृत् । |
| १०१ | सर्वत्राण् च तलोपश्च | ४।३।२२ | हेमन्तादण् तकारलोपश्च | हैमनं वासः |
| | (शिशिर) | | | |
| | हेमन्तशिशिरावहोरात्रे च च्छन्दसि | २।४।२८ | व्याख्यातम् | हेमन्तशिशिरावृतूनां प्रीणामि । |

